e-Pathshala पाठशाला
A Gateway to all Post Graduate Courses

| विषयः (Subject) | संस्कृतम् (Sanskrit) | |
|---|---|---|
| पत्रसंख्या (Paper Number) | 8 | |
| पत्रविषयः (Title) | वैदिकग्रन्थाः व्याकरणं च<br>(Vedic Texts and Grammar) | |
| पाठ्यांशसंख्या पाठ्यांशनाम च<br>(Module Number & Module Name) | 39, वेदार्थज्ञानस्य महत्त्वम्<br>(Importance of Vedic knowledhe) | |
| पाठ्यांशतत्त्वानि<br>(Focal Points of The Module) | • वेदार्थज्ञानस्य प्रशंसा<br>• वेदार्थज्ञानस्य द्विविधत्वम्<br>• अर्थज्ञानपूर्वकानुष्ठानेन यज्ञस्य दार्ढ्यम्। | |
| प्रमुखान्वेषकः<br>(Principal Investigator) | सह प्रमुखान्वेषकः-<br>(Co-Principal Investigator) | |
| प्रो. रमेशकुमारपाण्डेयः,<br>कुलपतिः,<br>श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्,<br>नवदेहली 110016 | प्रो. वे. कुटुम्बशास्त्री,<br>पूर्वकुलपतिः, राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली<br>सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी<br>सोमनाथसंस्कृतविश्वविद्यालयः, गुजरातः | |
| समन्वयकः<br>(Co-ordinator) | पाठ्यांशलेखकः<br>(Content Writer) | समीक्षकः<br>(Reviewer) |
| प्रो. एस्.एन्. रमामणिः,<br>अद्वैतवेदान्तविभागः,<br>श्रीलालबहादुरशास्त्रीराष्ट्रिय-<br>संस्कृतविद्यापीठम्,<br>नवदेहली 110016 | डॉ. गोपालप्रसादशर्मा<br>सहाचार्यो वेदविभागस्य,<br>श्रीलालबहादुरशास्त्रीराष्ट्रिय-<br>संस्कृतविद्यापीठम्,<br>नवदेहली 110016 | प्रो. श्रीकृष्णशर्मा,<br>निदेशकचरः,<br>संस्कृतप्राच्यविद्यासंस्थानम्,<br>कुरुक्षेत्रविश्वविद्यालयः,<br>कुरुक्षेत्रम् |
| पाठ्यांशसंलग्नकम्<br>(Module Tag) | SAN_P8_M39 | |

| आयोजकसंस्था (Anchor Institute) |
|---|
| श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली 110016 |

विषयसूची-

## १.० प्रस्तावना:-

सायणाचार्यो वेदार्थज्ञानस्य समर्थकः। अर्थज्ञानस्य महिमा शिक्षादिग्रन्थेषु अपि दृश्यते। याज्ञवल्क्यः निन्दति तान् जनान् ये अर्थविरहितं पठन्ति-

**गीती शीघ्री शिरःकम्पी यथालिखितपाठकः।**

**अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः॥ ( या.शि.श्लो.१९८ )**

अनर्थज्ञः अर्थः अभिप्रायो विनियोगो वा तं यो न जानाति। पाणिनीय शिक्षायाम् अपि अयं श्लोकः अस्ति (पा. शि.श्लो.32)

## २.० वेदार्थज्ञस्य प्रशंसा

पारस्करगृह्यसूत्रे "वेदं समाप्य स्नायात्" (पा. 2.6.1) इति सूत्रम् अस्ति। तदनन्तरं विधिर्विधेयस्तर्कश्च वेदः, षडङ्गमेके, न कल्पमात्रे, कामं तु याज्ञिकस्य (पा. 2.6-8) इत्यादीनि सूत्राणि सन्ति। अत्र मंत्रविध्यर्थवादात्मकब्राह्मणरूपो शब्दराशिः वेदशब्देन गृह्यते। तं समाप्य =ग्रन्थतः स्वीकृत्य अर्थतः अववबुध्य च गुरुणा अनुज्ञातो ब्रह्मचारी स्नायात्। तत्र एके षडङ्गंवेदं सार्थम्, अपरे निरङ्गं वेदं सार्थं स्वीकृत्य स्नानमिच्छन्ति। 'यज्ञं वेद' इति याज्ञिकः। तस्य तु कामं यथेच्छं स्नानं भवितुम् अर्हति (अर्थात् ग्रन्थमात्रं निरङ्गं वेदं स्वीकृत्य यज्ञविद्यां च अभ्यस्य स्नायात्। यज्ञविद्याविरहेण ग्रन्थमात्रे अधीते न स्नायादिति निषेधः)। इत्थं पूर्वं गुरुमुखोच्चारणानूच्चारणपूर्वकं वेदं ग्रन्थतः स्वीकृत्य स्नायात्। यतो हि वेदरक्षणाय प्रथमः उपायः अध्ययनम्। अध्ययनं च गुरुमुखोच्चारणानूच्चारणम्। गुरुः याम् आनुपूर्वीम् अवलम्ब्य यथा उच्चारयति तथैव अन्तेवासी अनूच्चारयेत् इति प्रकारो वेदाध्ययनस्य। अन्तेवासिनाम् उच्चारणं गुरूच्चारणसापेक्षं भवति। उच्चारणसौष्ठवं तदा एव निश्चितं भवति यदा गुरूच्चारितानुपूर्वीं शिष्यः उच्चारयेत्। अतः शिष्योच्चारणे गुरूच्चारणसापेक्षता अस्ति। गुरूच्चारणमपि स्वगुरूच्चारणसापेक्षमेवासीत्, तस्य अपि गुरोः स्वगुरूच्चारणसापेक्षता एवेति पूर्वपूर्वगुरूच्चारणसापेक्षोच्चारणम् एव शिष्येषु सिध्यति। एतादृशं वेदं ग्रन्थतः स्वीकृत्य स्नायात्।

अनन्तरं सति सामर्थ्ये संपूर्णफलेच्छया स्वस्मिन् आचार्यत्वसंपादनाय वा वेदं लक्षणतः अर्थतश्च विचार्य गुरुकुलात् निर्गच्छेत्।

सायणेन अध्ययनस्य अक्षरग्रहणान्तत्वं प्रतिपादितम्। तदा अर्थज्ञानस्य अविहितत्वम् अपि सिद्ध्यते इति चेत् -

वाक्यान्तरेण अर्थज्ञानस्य विधानात् ''ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयोज्ञेयश्च''। अत्र निष्कारणशब्देन अध्ययनज्ञानयोः काम्यत्वं वार्यते। अत्र वेदाध्ययनस्य नित्यत्वमेव प्रतिपादितं महाभाष्यकारेण। एव निन्दा।

## २.१ श्रुतिप्रतिपादितानि वचनानि -

अर्थज्ञाने पुरुषप्रवृत्तिकरं वचनद्वयं शाखान्तरगतं निरुक्तकारः एवं दर्शयति-

अथापि ज्ञानप्रशंसा भवत्यज्ञाननिन्दा च -

**स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्।**
**योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा।**
**यद्गृहीतमविज्ञातं निगदेनैव शब्द्यते।**
**अनग्नाविवशुष्कैधो न तज्ज्वलति कर्हिचित्।।** (नि.1.6)

**अयमर्थः** - लोके शास्त्रे च ज्ञानं प्रशस्यते, अज्ञानं च निन्द्यते। तत्र एवं सति वयमनिन्द्याः स्याम प्रशस्याश्चेति ज्ञेयं निरुक्तम्। अध्यात्माधिदैवताधियज्ञाभिधायिनां मंत्राणामर्थाः परिज्ञायन्ते। ते च परिज्ञाताः सन्तः पुरुषस्य उत्तमाय श्रेयसे भवन्ति। लोके सर्वत्र एतत्प्रसिद्धं प्रत्यक्षमेव यद्यः कश्चिद् विद्वान् भवति सः पुण्यफलाकांक्षिभिः जनैः पूज्यते।

स्थाणुः वृक्षः सः यतः पत्रपुष्पफलानाम् आत्मीयानां धारणमात्रेणैव संबध्यते, न तज्जैः गन्ध-रस-रूपस्पर्शोपभोगसुखैः। वेदाध्ययनस्य भारमात्रमेव ह्यसौ बिभर्ति। एवं यः एवार्थज्ञो भवति न ग्रन्थमात्राध्येता, स एव सकलम् अखण्डितं भद्रम्, अश्नुते प्राप्नोति।'' कम् इति सुखनाम तत्प्रतिषिद्धं प्रतिषिध्येत। न वा अमुं लोकं जग्मुषे किं च नाकम्। न वा अमुं लोकं गतवते किञ्च नासुखम् पुण्यकृतो ह्येव तत्र गच्छन्ति'' (नि.2.4) 'न अकं यस्मिस्तन्नाकम्' इति नाकशब्दस्य निर्वचनम्। तत् लोकवेदप्रसिद्धं निरतिशयं स्वर्गाख्यं स्थानम् एति। उक्तं च गीतायाम्-

**''न हि ज्ञानेन सदृशं पवित्रमिह विद्यते''**

(श्रीमद्भगवद्गीता-4.38)

पवित्रं पावनं पापनाशकमिति। श्रीमद्भगवद्गीतायां ज्ञानस्य माहात्म्यं भगवता एवं प्रतिपादितम्-

**यथैधांसि समिद्धोग्निर्भस्मसात्कुरुतेर्जुन।**
**ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा।**

**( श्रीमद्भगवद्गीता ४.३७ )**

इति प्रथमस्य यास्कोद्धृतस्य श्रुतिवाक्यस्य आशयः। द्वितीये श्रुतिवाक्ये अज्ञानस्य निन्दा वर्णिता।

यो वेदाध्ययनमात्रं करोति, सः तदीयं फलं न लभते। एवमर्थानभिज्ञेऽध्येतरि तदधीतमपिनिष्फलं भवति।

परिज्ञानं तु श्रेयसा च अभ्युदयेन युनक्ति इति। तस्माद् एतत् परिज्ञानाय अवश्यं निरुक्तशास्त्रम् आरब्धव्यम्। स्वर्प्राप्त्यर्थम् अपि अर्थज्ञानस्य आवश्यकता भवति।

तैत्तिरीयाः ज्ञानफलम् एवम् आमनन्ति–

''तदेषाभ्युक्ता–ये अर्वाङुत वा पुराणे वेदं विद्वांसमितो वदन्त्यादित्यमेव ते परिवदन्ति, सर्वेऽग्निं द्वितीयं तृतीयं च हंसमिति। यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति। तस्माद् ब्राह्मणेभ्यो वेदविद्भ्यो दिवे दिवे नमस्कुर्यान्नाश्लीलं कीर्तयेदेता एव देवताः प्रीणाति'' (तै.आ.2.15) इति।

ये जनाः वेदज्ञं निन्दन्ति ते आदित्याग्निवायून् एव निन्दन्ति, तस्मात् वेदज्ञः आदित्यरूपः, अग्निरूपः अपि च वायुरूप एव इति स्पष्टं श्रुतिवाक्येन। सर्वा देवताः वेदविदि ब्राह्मणे वसन्ति तस्माद् वेदज्ञस्य निन्दा सर्वासां देवतानां निन्दा। तस्माद् वेदज्ञस्य कदापि निन्दा न कार्या इति सिद्धान्तः।

## २.२ अर्थज्ञस्य द्विविधत्वम् -

वेदम् अधीत्य अर्थज्ञानवान् पुरुषो द्विविधः। इदानीन्तने काले जातः चतुर्दशविद्यास्थानकुशलः (पुराणन्यायादिविद्यायुक्तः) कश्चिद् उपाध्यायः (उपेत्य अधीयते अस्माद्)। पुराकाले समुत्पन्नः व्यासादिश्च। तम् एतम् उभयविधं विद्वांसं विद्यामदधनमदकुलमदोन्मत्ताः अहंमन्याः ये पुरुषाः अभितो विद्यादिषु दूषयन्ति, ते सर्वे पुरुषाः क्रमेण आदित्यमग्निं हंसं (वायुं) दूषयन्ति। यत्पापम् आदित्यादिदेवानां दूषणेन भवति, तदेव वेदविदुषः दूषणेन भवतीति भावः।

**तैत्तिरीयाः आमनन्ति–'' अग्नेर्वायोरादित्यस्य सायुज्यं गच्छति' (तै.आ. २.१५) इति।** वेदविदि ब्राह्मणे एतद् देवतात्रयं तु वसन्ति एव, सर्वा देवता अपि वसन्ति इति। तस्मात् तान्दृष्ट्वा स्मृत्वा वा सर्वदा नमस्कुर्यात्। वेदज्ञे विद्यमानं दोषं कदापि न कथयेत्। एवं कृते सति तत्तन्मंत्राधिष्ठातृदेवताः वेदार्थविदा स्मर्यमाणतया तदीयहृदयेऽवस्थिताः अयं नमस्कर्ता दोषयति। न च एतत्फलम् अध्ययनस्य एव इति शङ्कनीयम्, अत्र श्रुतिवाक्ये ''विद्वांसम्''

(तै.आ. 2.15) इति उक्तत्वात्। अन्यथा 'वेदमधीयानम्' इति आम्नायेत श्रुतिवाक्ये। तस्मात् सर्वदेवताबुद्ध्या प्राणिभिः पूज्यस्य अस्य वेदार्थविदः इहलोके परलोके अपि श्रेयःप्राप्तिः भवत्येव।

यो वेदमधीत्यापि वेदार्थं न विजानाति, सः पुमान् भारं धारयति। वेदमंत्रभारम् एव धारयति। छिन्नशाखं शुष्कं वृक्षमूलं 'स्थाणुः' इत्यनेन उच्यते। स्थाणुः इन्धनार्थम् एव उपयुज्यते न तत्र पुष्पफलादीनाम् आशा कार्या। केवलपाठकस्य व्रात्यत्वं न भवति।

पारस्करगृह्यसूत्रे उपनयनाख्यस्य संस्कारस्य विधिः उपदिष्टः। "अष्टवर्षं ब्राह्मणमुपनयेद्" "एकादशवर्षं राजन्यम्" "द्वादशवर्षं वैश्यम्" (पा.गृ.2.2.1-3) इत्यादिभिः सूत्रैः ब्राह्मणादिवर्णानां क्रमेण उपनयनकालः उपदिष्टः। तत्रैव अग्रिमेषु सूत्रेषु उपनयनकालस्य परमावधिः वर्णितः। आषोडशाद्वर्षाद् ब्राह्मणस्यानतीतः कालो भवति" "आद्वाविंशाद् राजन्यस्य" "आचतुर्विंशाद् वैश्यस्य" (पा.गृ.2.5.36-38)' इति त्रिषु सूत्रेषु परमावधेः वर्णनमस्ति। मनुना अपि उक्तम्-

**आषोडशाद् ब्राह्मणस्य सावित्री नातिवर्तते।**
**आद्वाविंशेः क्षत्रबन्धोराचतुर्विंशतेर्विशः॥ ( म.स्मृ. २.३८ )**

"अत ऊर्ध्वं पतितसावित्रीका भवन्ति" (पा. 2.5.39) इत्युक्तत्वात् पञ्चदशाद् एकविंशात् त्रयोविंशाद् ऊर्ध्वम् अनुपनीताः ब्राह्मणादयः पतितसावित्रीका भवन्ति। पतिताः स्खलिताः अधिकाराभावान्निवृत्ता सावित्री गायत्री येभ्यः ते पतितसावित्रीकाः भवन्ति सम्पद्यन्ते। एते पतितसावित्रीकाः व्रात्यशब्देन उक्ताः।

उपनयनसंस्कारस्य फलं वेदाध्ययनं, ये वेदाध्ययनं कुर्वन्ति, यथोक्तकाले उपनयनपूर्वकं वेदाध्ययने ये प्रवृत्ताः, तेषां व्रात्यत्वं न भवति, इत्येतावन्मात्रं वेदाध्ययनस्य फलं ते लभन्ते। विनियोगाज्ञानात् एतादृशाः वेदाध्यायिनः स्वर्गादिफलसिद्धिम् अपि न प्राप्नुवन्ति, अनुष्ठानज्ञानाभावात्। "स्थाणुरयम्" इति श्रुतिवाक्ये प्रयुक्तेन किलशब्देन लोकप्रसिद्धिः द्योत्यते। यतो हि लोके अपि यावती धनादिपूजा पाठकस्य दृश्यते ततोऽप्यधिका वेदार्थविदुषि दृश्यते।

## २.३ यद्गृहीतमितिमंत्रस्य तात्पर्यम्

यद् वेदवाक्यं गुरुमुखात् शब्दतः श्रुतम्, अर्थतश्च अविज्ञातं पाठमात्रेणैव नित्यम् उच्चार्यते न पुनः अर्थतो विचार्यते। तस्य किम् इत्यपेक्षायाम् आह- यथा काष्ठम्

अग्निरहितप्रदेशे न दीप्यते, एवम् अर्थानभिज्ञेऽध्येतरि तद् अधीतम् अपि निष्फलं भवति। तदेव परिज्ञातं तु श्रेयसा अभ्युदयेन च युनक्ति, तस्माद् अर्थज्ञानेन भाव्यम्।

अतश्च वेदस्य मुख्यत्वसिद्ध्यर्थम् अर्थज्ञानम् आवश्यकम्।

## २.४ वेदस्य अलौकिकत्वम्

''अलौकिकं पुरुषार्थोपायं वेत्ति अनेन'' इति वेदशब्दस्य निर्वचनम्। उक्तं च –

**प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।**
**एतं विदन्ति वेदेन तस्माद्वेदस्य वेदता।।**

अलौकिकं पुरुषार्थोपायं अर्थज्ञः एव जानाति। तस्माद् अर्थज्ञः एव वेदज्ञः।

## २.५ ''उत त्वः'' इति मंत्रस्य तात्पर्यप्रतिपादनम्-

यास्केन एका अन्या ऋग् उदाहृता, यस्यां ज्ञानं प्रशस्यते अज्ञानं च निन्द्यते (नि.1.19)-

**उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम्।**
**उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः।।**

(ऋ.सं.10.71.4.) इति।

अस्मिन् मंत्रे प्रयुक्तः उतशब्दः अप्यर्थे। उशब्दो वितर्के। त्वः इत्येकवाची। अयमर्थः-बहूनामपि समानोदरपृष्ठपाणिपादानां समानमेवाध्ययनमधीयानानाम् एकः कश्चित् पुरुषः पाठमात्रपर्यवसितः मनसा पर्यालोचयन् अपि वेदरूपां वाचं न पश्यति। एकवचनबहुवचनादिविवेकाभावे पाठशुद्धेः अपि कर्तुमशक्यत्वात्। वेदवाक्येषु अव्युत्पन्नः कथं पाठं निश्चिनुयात्, अर्थविज्ञानरूपदर्शनफलाभावात्। इति प्रथमपादतात्पर्यम्।

एवम् एकः शृण्वन्नपि न शृणोति एनां वाचं श्रवणफलाभावात्। येनैव हि वाचः अर्थः अवबुध्यते तेनैव सा श्रुता भवति। नेतरेण अविदुषा। अर्थज्ञानपूर्विका प्रवृत्तिनिवृत्ती एव श्रवणफलं तदभावे तच्छ्रवणम् अपि अश्रवणप्रायम्। अनेन अर्धर्चेन अविद्वन्निन्दनमाह। मीमांसका वेदमपौरुषेयं मन्वानाः वेदस्य एव स्वातन्त्र्येण प्रवर्तकत्वं निवर्तकत्वं च आहुः। इति द्वितीयपादस्य अभिप्रायः।

अथ तृतीयपादेन अर्थज्ञस्य प्रशंसा भवति-कस्मैचिद् अर्थज्ञाय वेदः स्वकीयां तनु विसस्रे विवृणोति इत्यर्थः। इति तृतीयपादस्य भावः।

'पतिः अस्यां पुनः जायते' इति जाया, सा इष्टाय भर्त्रे कामयमाना इच्छन्ती। सुवासाः कल्याणवासाः एवं वागपि अर्थज्ञाय स्वात्मानं प्रकाशयति। यथा स पुरुषः ताम् एनां स्त्रियं यथावत्पश्यति नेतराम् एवं सः अर्थज्ञः एव एतां वाचं यथावच्छृणोति नेतरः।

## २.६ 'उत त्वम्' इति मंत्रस्य तात्पर्यप्रतिपादनम्-

पुनरपि यास्कः ऋगन्तरम् उदाजहार (नि.1.20)

**''तस्योत्तरा भूयसे निर्वचनाय**
**उत त्वं सख्ये स्थिरपीतमाहुर्नैनं हिन्वन्त्यपि वाजिनेषु।**
**अधेन्वा चरति माययैष वाचँ शुश्रुवाँ अफलामपुष्पाम्।।**

(ऋ.सं. 10.71.5) इति।

अयमर्थः- पूर्वोदाहृतायाः 'उत त्वः पश्यन्' इत्यादिकायाः ऋचोऽनन्तरमेव आम्नाता काचिदृक् तस्य पूर्वोक्तमंत्रार्थस्य बहुतराय निर्वचनाय संपद्यते। तमर्थम् अतिशयेन प्रतिपादयितुं प्रभवति।

अस्मिन् मंत्रे अपि पूर्ववत् उतशब्दः अप्यर्थे वर्तते, त्वः इत्येकवाची। विदुषां संसदि या सत्कथा भवति सा सखिकर्मत्वात् सख्यम् इत्युच्यते। सा च वाचा क्रियते, अतः वाक्संबन्धाद् वाक्सख्ये पीतं मधु यस्य हृदये स्थिरं भवति स स्थिरपीतः। चतुर्दशविद्यास्थानकुशलं पुरुषं वेदरूपाया वाचः सख्ये स्थित्वा स्थैर्येण वेदोक्तार्थामृतपानयुक्तमाहुः विज्ञाः कथयन्ति। **''सखिविदं सखायम्''** (तै.आ. 2.15) इति श्रुतौ वेदस्य सखित्वम् उदाहृतम्। स्थिरपीतम् इत्यस्य रममाणं विपीतार्थमित्याशयः। स्थिरमविचालिनमप्रच्यवमानधर्माणं तत्रैव रममाणमिति यावत्। विपीतार्थमापीतार्थं गृहीतार्थमिति यावत्। लोके अपि हि ज्ञातार्थं पुरुषं पीतार्थम् इति वदन्ति। यम् एनं स्थिरपीतं विज्ञातार्थं पुरुषं वाजिनेषु वाक् इना ईश्वरा येषां ते वाजिनाः। तेषु मध्ये वाग्ज्ञेयेषु अर्थेषु बलवत्सु दुर्विज्ञेयेषु नापि हिन्वन्ति। अत्र अपिशब्दः अन्वर्थे। केचिदपि नानुगन्तुं शक्नुवन्ति। इति पूर्वार्धस्य आशयः।

अथ इदानीं केवलपाठकः अनर्थज्ञः (अविद्वान्) उत्तरेणार्धर्चेन निन्द्यते- एषः अविज्ञातार्थः धेनुत्ववर्जितया कामानामदोग्ध्र्या वाक्प्रतिरूपया मायया निश्चयेन चरति। वाक्तुल्यया यतो हि नेयं वास्तविकी वाक्। या हि कामदोग्ध्री सैव सा। यथा वन्ध्या पीना गौः किं द्रोणमात्रमियं क्षीरं दोग्धीति? मायां भ्रान्तिमुत्पादयन्ती चरति, यथा वा वन्ध्यो वृक्षः

अकाले पल्लवादियुक्तः सन्पुष्यति फलतीति भ्रान्तिमुत्पादयंस्तिष्ठति तथार्थवर्जितां कर्मादिविषयज्ञानवर्जितां वा वाचं श्रुतवान्केवलं पाठमात्रं प्रब्रुवाणः चरति इत्यर्थः। पाठमात्रपरः पुष्पफलरहितां वाचं शुश्रुवान् भवति श्रुतवान् भवति।

पूर्वकाण्डोक्तस्य (कर्मकाण्डोक्तस्य) धर्मस्य ज्ञानं पुष्पम्। उत्तरकाण्डोक्तस्य ब्रह्मणो ज्ञानं फलम्। यथा लोके पुष्पं फलस्योत्पादकं भवति तथा यज्ञादिकर्मणामनुष्ठानद्वारा फलात्मकब्रह्मज्ञानेच्छाभवति। तथा च श्रुतिः-"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन" (बृ उ. 4.5.25) इति। अयमर्थः -वेदो मंत्रब्राह्मणात्मकः अनूच्यते गुरूच्चारणानन्तरं पठ्यते इति वेदानुवचनं वेदाध्ययनम्। तमेतं मंत्रोक्तविशेषणं वेदानुवचनेन नित्यस्वाध्यायलक्षणेन अन्तःकरणशुद्धिद्वारा विविदिषन्ति वेदितुम् इच्छन्ति। यज्ञेन, दानेन, तपसा, अनाशकेन कामानशनलक्षणेन वेदितुम् इच्छन्ति।

यथा फलेन तृप्तिर्भवति, तथा ब्रह्मज्ञानेन मनुष्यः कृतकृत्यो भवति। "यत्पूर्णानन्दैकबोधस्तद् ब्रह्माहमस्मीति कृतकृत्यो भवति" (परमहंसोपनिषत्.4) इति श्रुतेः। तादृशः पुष्पफलरहितवेदपाठकः स एष पुमान् अधेन्वा मायया सह चरति।

नक्षत्रेष्टिकाण्डे प्रतीष्टिफलवाक्यं यागतद्वेनयोः समानमेव आम्नातम्-"यथा ह वा अग्निर्देवानामन्नादः, एवं ह वा मनुष्याणां भवति य एतेन हविषा यजते य उ चैनदेवं वेद" (तै.ब्रा.3.1.4.1) इति। अनेन वाक्येन स्पष्टं भवति, यद् यागवत् फलाय स्ववेदनम् अपि विधीयते। अनेन न्यायेन सर्वेष्वपि ब्राह्मणेषु वेदनविधयो ज्ञातव्याः।

## ३.० विद्यमानेनापि फलेन प्रशंसायाः प्रतिपादनम्-

ननु "विद्याप्रशंसा" (जै.1.2.15) इति सूत्रे वेदनफलानां प्रशंसारूपत्वं कथितम् इति चेत्, किं तेन। विद्यमानेनापि फलेन प्रशंसितुं शक्यत्वात्। दर्शयागस्य पूर्णमासयागस्य च समयातिक्रमणे सति प्रायश्चित्तरूपं वैश्वानरेष्टिं विधातुं विद्यमानेनैव स्वर्गफलेन स्तुतिः क्रियते-"सुवर्गाय हि लोकाय दर्शपूर्णमासाविज्येते" (तै.सं.2.2.5.4) इति। एतच्च आचार्यैः ब्रह्मज्ञानफलवाक्यस्य स्वार्थे अपि तात्पर्यं दर्शयितुम् उदाहृतम्-

**इच्छाम्येवार्थवादत्वं वचसोऽन्यपरत्वतः।**
**यथावस्त्वभिधायित्वान्न त्वभूतार्थवादता॥**
**इज्येते स्वर्गलोकाय दर्शादर्शौ यथा तथा।**
**न त्वभूतार्थवादत्वं पापश्लोकाश्रुतिर्यथा॥**

(बृ.उ.वा.127-128) इति।

अयमाशय:–ब्रह्मज्ञानस्य फलवाक्यं वयम् अर्थवादत्वेन स्वीकुर्म:। यतो ह्ययं ब्रह्मज्ञानस्य प्रशंसार्थम् अस्ति, परं च यथार्थवस्तो: अभिधायित्वाद् अस्य अभूतार्थवादता (गुणवादता) नास्ति। यथा च 'सुवर्गाय हि लोकाय दर्शपूर्णमासाविज्येते' अस्य वाक्यस्य भूतार्थवादता, तथा प्रकृतवाक्यस्यापि। यथा ''यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति'' इत्यस्य वाक्यस्य अभूतार्थवादता (गुणवादता) तथा प्रकृतवाक्यस्य अभूतार्थवादता नास्ति।

### ३.१ अर्थज्ञानमात्रेण फलसिद्धावपि अनुष्ठानस्य न वैयर्थ्यम् –

वेदनमात्रेण फलसिद्धौ नानुष्ठानवैयर्थ्यं शङ्कनीयम्, फलभूयस्त्वेन परिहृतत्वात्। यथाह जैमिनि:–''फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणत: सारतो वा फलविशेष: स्यात्'' (जै.1.2.17) इति। अयमर्थ:–फलस्य कर्मभ्यो निष्पत्ते: श्रुतत्वात्, तेषां कर्मणां परिमाणत: अल्पत्वमहत्त्वात्मकात् फलविशेष: फलपरिमाणविशेष: स्यात्। सारतो वा फल विशेष: स्यात्।

### ३.२ अर्थज्ञानपूर्वकानुष्ठानस्य फलातिशयत्वम्–

छान्दोग्योपनिषद: अध्येतार: केवलानुष्ठानाद् विद्यासहिते अनुष्ठाने फलातिशयं कथयन्ति–''तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद। नाना तु विद्या चाविद्या च। यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति (छा.उ.1.1.10) इति। अत्रापि अर्थज्ञानस्यैव महिमा वर्णित:।

### ३.३ अर्थज्ञानस्यापि अपूर्वत्वप्रतिपादनम्–

यदि कोऽपि पृच्छति कुतस्तव एतावती वेदने भक्ति: इति चेत्? तस्मै वयं पृच्छाम: कुतो वा तव एतावान् प्रद्वेष:? शास्त्रेषु अर्थज्ञस्य महिमा दृश्यते, तस्य निन्दा कुत्रापि न वर्णिता। वाजसनेयिन: आमनन्ति–'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च'' (बृ.उ.4.4.2) अयमर्थ:–परलोकं गच्छन्तं विद्या च कर्म च 'विद्याकर्मणी' सम्यगन्वारभेते अनुगच्छत:, क्रियमाणस्य कर्मण: तत्फलस्य च भुक्तस्य य: संस्कारो हृदि संश्रित: सा पूर्वप्रज्ञा इत्युच्यते सा अपि परलोकं गच्छन्तं समन्वारभते। तस्माद् एव विद्याकर्मपूर्वप्रज्ञाख्यं त्रयं देहान्तरप्रतिपत्त्युपभोगसाधनम्। अनेन अर्थज्ञानस्यापि विहितत्वं सिध्यति।

### ४.० विषयसंग्रह:

अस्मिन् पाठ्यांशे वेदार्थज्ञस्य प्रशंसा दर्शिता। प्रशंसाया: प्रसंगे श्रुतिप्रतिपादितानि वचनानि दर्शितानि। लोके यथा अर्थज्ञ: प्रशस्यते तथैव वेदार्थज्ञ: वाच: तात्पर्यं व्याकरणमीमांसादिशास्त्रेण ज्ञातुं शक्नोति, इति प्रशस्यते। वेदे अर्थज्ञानपूर्वकानुष्ठानस्य महिमा वर्णित:। सायणाचार्येण अर्थज्ञानस्यापि अपूर्वत्वं वर्णितम्।